# ख्यातिवादः

श्री शङ्करचैतन्यभारतीविरचितः

ग्रन्थकृतैव संशोधितः

THE

# KHYĀTI-VĀDA

by

S'ANKARA CHAITANYA BHĀRATĪ

*Edited by*

S'ANKARA CHAITANYA BHĀRATI

with a Foreword

*by*

M. M. Pt. Gopinath Kaviraj

*1935.*

# FOREWORD

The problem of Error, in its metaphysical, logical and psychological aspects, has been accorded a prominent place in every system of Indian Philosophy, both ancient and modern. The question has been discussed in each school from its peculiar standpoint and the view consistent with the standpoint boldly defended as against the various other views current in the schools. The history of Indian Philosophy records numerous theories on this vexed question, of which the anyathakhyati, the akhyati, the atmakhyati, the satkhyati, the asatkhyati, the sadasatkhyati and the anirvachaniyakhyati occupy the most prominent place. The Vibhramaviveka of Mandana Mis'ra briefly touched on some of these theories.

The following pages embody a new but original contribution on this subject from the viewpoint of Sānkara Vedānta. The author in the booklet passes in review the different theories of Error and points out the logical defects inherent in each. As he represents the monistic position of S'ānkarāchārya, almost every theory not consistent with his own has its share of sharp criticism.

The Anirvachanīyakhyāti of Vedānta implies that the entire Universe is an appearance, unreal in content, projected by Reality and imposed on Itself through its own self-alienating Power, which though positive in nature is spoken of as indescribable on account of its being differentiated from Pure Reality on one hand and from Absolute Non-entity on the other. Reality is the back-

ground, so to say, of the play of its Power, which has a double aspect concealing as it were its unique substrate in one and revealing infinite varieties of phenomena in the other. The vedantic literature explains in different ways how this mysterious process in at all possible. The psychology and logic of Error in monistic Vedanta has to keep in view the basic peculiarity of the system and is therefore a study replete with great interest.

The doctrine of Adhyasa, or erroneous superimposition which has found a brilliant treatment in S'ankaras commentary on Brahma Sutras and most of the subsequent works commenting on or based on it (e.g. Bhāmatī, Ratnaprabhā, Pānchapādikā, Pānchapādikā vivarana, Vivarana prameya sangraha etc. ) accounts for the possibility of confusion between Self and Not-self, between Spirit and Matter and between the Eternal and the Temporal.

I hope the curious reader interested in philosophical studies will find in the booklet ample food for reflection.

Govt. Sanskrit College,
Benares.

GOPINATH KAVIRAJ.

| विषय | पृष्ठ |
|---|---|

ॐ नमः परमात्मने ।

# ख्यातिवादः

आकृतिं या निराकृत्य सच्चिदानन्दशब्दभाक् ।
सद्वचोभ्योऽधिगन्तव्या तां परां समुपास्महे ॥ १ ॥

सादरं तं नमस्कुर्वे विश्वरूपं तु भारतीं ।
पादाम्बुजेषु यस्यासन् शिष्यालयः समन्ततः ॥ २ ॥

ख्यातावथापि यदपीह मयात्र किञ्चित्
सन्दृभ्यते सुनिपुणं परिगृह्य सारम् ।
ज्ञानं रिरक्षिपति चेदनुमोदनीयः
कृत्यैतया सुकृतिभिः प्रकृतिं स्मरद्भिः ॥ ३ ॥

हेत्वात्मनाऽस्तु नवनीतमथापि नीतम्,
कार्यात्मना जनयितुं नहि यत्यते न ।
मृत्स्नामुपेत्य कलशो जनिमेतु लोके,
तां नैव वाञ्छति जनो जलहर्तुकामः ॥ ४ ॥

मायामालम्ब्य नृत्यच्छ्रुतिशिखरशतैर्ज्ञाप्यमानं परं यत्,
योगारूढैर्मुनीन्द्रैः परिहृतविषयैः काम्यमानं विमुक्त्यै ।
चित्तं चैत्तं च बुध्यद्विगतमलिनिमाभासमानं त्वहच्च,
गोभिर्गोपैश्च नित्यं वलयितमपि न द्वैतमालम्बते यत् ॥ ५ ॥

प्रत्यहं तन्नमस्कुर्वन् शङ्करचेतनो मुनिः ।
भारतीपदमालम्ब्य भारतीदययाचितः ॥ ६ ॥

शास्त्रविस्तृतकान्तारे परिक्राम्यति यः सदा ।
मोदमानो विनोदाय लेखनीमुदतिष्ठिपत् ॥ ७ ॥

इह तावद्भ्रान्तिर्न कस्य जायते "स्थाणौ मम चौरप्रतीतिः समजनि" इत्याऽऽभीरदारेभ्योऽनुभवात् तथापि परीक्षकैस्तत्र विप्रतिपद्यमानै र्लोकव्यवहारमनुरुन्धानैः सा विविधमुपपाद्यतेऽतएव च तेषां विप्रतिपत्तिः संशीतिजननीभूयमनुभूय विचाराङ्गभावमश्नुते, विचारविनिर्वर्त्या हि संशीतिः विप्रतिपत्तिं विना न निर्वहतीत्याविचारारम्भमनुवर्तमानापि विप्रतिपत्तिःतदुत्पादनेनैव न्यायाङ्गमितिस्थितिः। तत्र च "सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः। न सर्वलोकसिद्धस्य लक्षणेन निवर्तनमिति" नीतिमनुसरता इत्थमेवानुरूपं सर्वमपि निर्वक्तुमर्हम् येन सिद्धमेवानुरुध्येत नो चेत्सार्वजनीनमनुभवमन्यथाकुर्वता लक्षणादिनिर्माणेन स्वानभिज्ञतामवद्योतयता वादिना पराजितेन किमिति न भाव्यम्; एवं निर्वक्तुमनीशानो हि स्वबुद्धिमध्यासीनेन येन केनापि लक्षणाभासेनानुभूतिमेवान्यथयतीति विद्वज्जनैरुपेक्षणीयतामेवापद्यते।

तत्र चानिर्वचनीयख्यातिवर्ज-तत्तत्ख्यातिं निरुच्य व्यवहृतिं सिद्धमपह्नुवते वादिन इति व्यक्तीकरिष्यते। एतादृशविषयेषु विप्रतिप्रत्तिषु बह्वीषु जागरूकास्वपि " सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः " इति भणितिमालम्बमानैः किन्नाम यन्न निर्णेतुं पार्यते इति प्रतिपत्त्रा मोदमानेनैव भाव्यम्–न तु दूयमानमानसेन।

अपि च शाङ्करेषु जीवत्सु तार्किकादयः प्रतिभटा जीवितुमेव नोत्सहन्ते। सर्वेषामपि वाह्यावाह्यदर्शनानां वेदान्तोत्सङ्गमनासाद्य न निर्वाहः। समुल्लसन्तु तानि वेदान्तैकवाक्यतामापद्य नाम, न निवारयामः, नो चेत्खण्डनदुर्गतिपूरैः प्लावनीयानीति न मनोव्यथोरवकाशोऽपीति। तत्र विप्रतिपत्तयः " जाग्रति हि प्रकारेषु विवादा न तु धर्मिणि। प्रकारे सन्दिहानोऽपि संशेते नहि

धर्मिणि" ॥ धर्मिप्रकारको न सन्देह इत्यर्थः ।

प्रथमा साकारख्यातौ—शुक्तिगतत्वेन भासमानो रजतत्वादिर्ज्ञानवृत्ति र्नवा—

विज्ञानमेव तत्तदाकारेण प्रथते इति ब्रुवाणस्य योगाचारस्य विधिकोटिः, निषेधकोटिरन्येषाम्, ज्ञानवृत्तित्वं ज्ञानत्वादौ प्रसिद्धम्-तदभावश्च बाह्यत्वे । यद्यपि बाह्यत्वे भ्राम्यतः बाह्यत्वमपि ज्ञानाकारः, तथापि वस्तुस्थितिमनुरुध्योभयत्र मते बाह्यत्वं न ज्ञानधर्मः किन्तु आन्तरत्वमेवेति बोध्यम् । बाह्यत्वं भासमानमपि अलीकं न ज्ञानाकार इति हि बौद्धा मन्वते ।

ननु विधिकोटौ सिद्धसाधनम्, विषयतासम्बन्धस्य वृत्तिनियामकत्वपक्षे तेन सम्बन्धेन रजतत्वस्य ज्ञाने वृत्तितायाः नैयायिकैरभ्युपगमनीयत्वात्, एवं कालिकादिनाऽपि तद्बोध्यम्, समवायसम्बन्धावच्छिन्नवृत्तितासाध्यता तु न शङ्कास्पदमेव, बौद्धानां समवायस्य शशश्रृङ्गायमाणत्वात्, तथा च बाधः, एवं घटज्ञाने रजतत्वस्यवृत्तेर्बाधः, अपुरोवृत्तिशुक्तिगतत्वेनाभासमानत्वाच्च पक्षाप्रसिद्धिः; देवदत्तीयभ्रमीयरजतत्वस्य यज्ञदत्तीयज्ञानेऽवृत्तेश्च बाधः, प्रभाकरेण च पक्षाऽप्रसिद्ध्या प्रत्यवस्थेयम्, नो खलु तदीये नये रजतत्वं शुक्तिगतत्वेन भासते, भ्रमानभ्युपगमेनान्यगतधर्मस्यान्यत्राभासनात् । भगवद्रामानुजादिभिः सर्वज्ञानयाथार्थ्यवादिभिरपि शुक्तिगतत्वेन रजतत्वभानमभ्युपगम्यत एव, सर्वस्य सर्वात्मकत्वेन त्रिवृत्करणश्रुत्या शुक्तावपि रजतत्वस्य रजतावयवसत्त्वप्रयुक्तं सत्त्वमस्त्येवेति न तेषाम्मते तु पक्षाप्रसिद्धिः शक्यशङ्केति ध्येयम् ।

एवं निषेधकोटावपि विषयितादिना वृत्तेः सत्वाद्बाधः समवायेन वृत्तित्वाभावसाधनेऽर्थान्तरम्, परेषां प्रतियोग्यप्रसिद्ध्या साध्याप्रसिद्धिश्च स्यात्, पुरुषान्तरीयज्ञानमादाय

सिद्धसाधनमर्थान्तरञ्चास्त्येव, अन्यथाख्यात्यादिसिद्धिं विनापि साध्यस्य पक्षे उपसंहर्तुं शक्यत्वात्। एवमन्यविषयकज्ञानमादायापि उक्तदोषद्वयं बोध्यम्, प्रभाकरेण च पूर्वाभिहितदिशा पक्षाप्रसिद्धिरुद्भावनीयैवेति चेत्,

मैवम्, विषयतादिसम्बन्धानां वृत्त्यनियामकत्वाज्जन्यमात्रस्य च कालोपाधित्वाभावान्न प्रथमाभिहितो दोषः। नहि सन्ति स्वारसिकाः प्रत्ययाः, यैः परवन्तो वयं तादृशसम्बन्धानां वृत्तिनियामकत्वमातिष्ठेमहि। अभ्युपेत्य परं समादध्मः। तत्पुरुषीयतद्भ्रमीयशुक्तिनिष्ठपुरोवर्तित्वावच्छिन्नविशेष्यतानिरूपितप्रकारताश्रयो रजतत्वादिः तत्पुरुषीयतज्ज्ञानतादात्म्यापन्नो न वा, विधिकोटिर्ज्ञाने प्रसिद्धा, तादात्म्यसम्बन्धस्याभेदाभिषिक्तस्यानभ्युपगतावपि नैयायिकातिरिक्तैः, ज्ञानात्मकत्वं तु नाप्रसिद्धम्, तत्पुरुषीयत्वादिनिवेशात् पुरुषभेदनिबन्धनो ज्ञानभेदनिबन्धनश्च दोषोऽपाहारि, एकदा च न द्वाभ्यां विवाद इति सम्प्रदायात् नैयायिकादिना विचारप्रसङ्गे उक्ता सरणिः, प्रभाकरेण सह कथासंगरे तु तत्पुरुषीयतत्प्रवृत्ति ( पुरोवर्तिशुक्तिविशेष्यकप्रवृत्ति ) जनकज्ञानविषयरजतत्वं तादृशज्ञानात्मकं न वेति विप्रतिपाद्यम्, मा नाम चुम्बि भ्रान्त्या प्रभाकरः, भेदाग्रहीतिं तु प्रवृत्तिजननीपदे सोऽभ्यषिञ्चदेव। तथा च निषेधकोटिरपि न पूर्वाभिहितदूषणालिङ्गिता, ज्ञानभेदस्यैव तत्र साध्यत्वात्।

अथ असत्संसर्गख्याति विप्रतिपत्तिः।

असत्ख्यातिर्द्विधा, केचित् संसर्गांशे एवासत्त्वं प्रतिपेदिरे अपरांशे सत्त्वमेव, माध्यमिकास्तु सर्वांशे एवासत्त्वमन्वमिन्वत। तत्र पूर्वस्यां विप्रतिपत्तिः, असत्तादात्म्यविषयकमिदं रजतमिति ज्ञानं स्वातिरिक्तप्रमेयालम्बनं न वा। अत्र विधिरसत्संसर्गख्याति-

मभ्युपगच्छतः, निषेधश्च विज्ञानवादिनः। ननु पक्षे तादात्म्ये-ऽसत्त्वं किमात्मकं प्रावेशि, अलीकत्वात्मकं तु न निवेश्यम्। असत्संसर्गख्यातिवादिना तादृशस्यैवासत्त्वस्य भानस्वीकारेऽपि बहिष्ट्वातिरिक्तस्य ज्ञानाकारतामतालम्बिना तादात्म्यस्य ज्ञानाकारत्वमुपगन्तव्यम् न त्वलीकत्वं, ज्ञानाकारस्यापि चालीकत्वे बहिष्ट्वाबहिष्ट्वयोरलीकत्वानलीकत्वकृतो विशेषः स्वदर्शनसिद्धो बाध्येत, असत्ख्यातिपर्यवसायिता च न शक्यवारणा भवेत्, पक्षतावच्छेदकैक्यं चोभाभ्यां वादिप्रतिवादिभ्यामनुरोद्धव्य-मेवेति असत्संसर्गभानं भणता च ज्ञानाकारतानङ्गीकाराद् न तादूप्येण परिभाषितमप्यसत्त्वं निवेशार्हम् इति चेत्,

अलीकत्वमेवासत्त्वं निवेश्यम्। तच्च विज्ञानवादिना यथेदन्त्वे बहिष्ट्वे च प्रतीयमानेऽपि स्वीकृतं ज्ञाने इदन्तायाः बहिष्ट्वस्य वाऽभावात्तथा तुल्ययुक्त्या ज्ञाने इदन्तादात्म्यस्या-प्यभावात् ज्ञाने इदन्तादात्म्यमलीकमेवाभ्युपगमनीयम्। तथाचा सत्तादात्म्यविषयकं पक्षीभूतं ज्ञानमुभयोः प्रसिद्धमिति न दोषः। अलीकत्वं च केवलान्वय्यत्यन्ताभावप्रतियोगित्वे सति उत्पत्त्या-दिशून्यत्वं, सत्यन्तस्य वेदान्तिनां घटादिसाधारण्यात् विशेष्य-दलम्, तावन्मात्रोक्तौ तेषां ब्रह्मण्यतिव्याप्तिरतो विशेषणदलम्, तैर्नैयायिकैरिव विभावपि केवलान्वय्यत्यन्ताभावप्रतियोगित्वं नाभ्युपागमि, ब्रह्मभिन्नत्वे सतीति तु लघीयः, तथापि नैयायिकानां गगनादिष्वतिव्याप्तिः; अतो गुणानाश्रयत्वे सति अभावत्वा नाश्रयत्वमपि देयम्, तेनाश्रयनाशजन्याश्रितध्वंसेऽपि नातिव्याप्तिः।

नित्यद्रव्यभिन्नत्वे सति आश्रयनाशजन्यध्वंसभिन्नत्वं प्रतियोगिनि विशेषणं यद्यपि दीयेत, नित्यद्रव्याभावस्य केवलान्वयित्वेन सत्यन्तेन तत्प्रतियोगिनो नित्यस्य व्यावर्तनात्; तथापि बौद्धानां नित्यस्यैवाप्रसिद्ध्या तद्घटितं विशेषणमप्रसिद्धं

स्यादिति । नैयायिकाद्यभिमतनित्यभिन्नत्वे सतीत्येवं तु दातुं शक्यते ॥

वस्तुतस्तु गगनादीनां केवलान्वय्यत्यन्ताभावप्रतियोगित्वं न युक्तिसहम् । तदन्तरेण कस्याश्चिदनुपपत्तेरभावात्, इह गगनं नास्तीत्यप्रतीतेश्च; गगनादि तादृशात्यन्ताभावप्रतियोगि, वृत्तिनियामकसंयोगाप्रतियोगित्वादित्याद्यनुमानानामनुकूलतर्कविधुरतयाऽसाधकत्वादिति केवलान्वय्यत्यन्ताभावप्रतियोगत्वे सत्युत्पत्त्यादिशून्यत्वमेवालीकत्वमवद्याचुम्बितम् । विज्ञानवादिनाऽसत्संसर्गभानवादिना च सत्त्वेन यदभ्युपगतं तद्भिन्नत्वेनानुगमय्यार्थक्रियाकारित्वशून्यत्वरूपेण वा पक्षेऽसत्त्वं शक्यप्रवेशमिति बोध्यम् । स्वशब्दस्य समभिव्याहृतपरत्वाच्च पक्षीभूतज्ञानातिरिक्तं स्वपदेनादाय विधिकोटौ सिद्धसाधनं योगाचारेण निषेधकोटौ बाधश्च न दातुं पार्यते ।

व्यासज्यवृत्तिधर्मावच्छिन्नस्वप्रतियोगिकभेदं स्वस्मिन्नादाय विधिकोटौ सिद्धसाधनम्, निषेधे च बाधः सम्भाव्यते इति व्यासज्यवृत्त्यनवच्छिन्नत्वं तद्व्यक्तित्वपर्याप्ताच्छेदकताकप्रतियोगिताकत्वं वा भेदे निवेश्यम्, तथा च केवलान्वय्यत्यन्ताभावप्रतियोगित्वविशिष्टोत्पत्त्यादिशून्यतादात्म्यविषयताकमिदं रजतमितिज्ञानं व्यासज्यवृत्तिधर्मानवच्छिन्नस्वप्रतियोगिताकभेदविशिष्टप्रमेयविषयताकं नवेति फलितम्, प्रभाकरमते च तादात्म्यानवगाहनात् न तेन सहैषा विप्रतिपत्तिरिति बोध्यम् पक्षीभूतज्ञानातिरिक्तिप्रमेयालम्बनत्वं अन्यस्मिन्ज्ञाने प्रसिद्धम् । निषेधश्चानालम्बने बहिष्टवादौ प्रसिद्ध इति ।

अथ सर्वासत्ख्यातिविप्रतिपत्तिः ।

सर्वांशेऽसत्त्वस्वीकर्तृविप्रतिपत्तिस्तु इदं रजतमिति ज्ञान-

मसन्मात्रविषयकं नवेति, विधिनिषेधौ शशशृङ्गादिज्ञानघटादिज्ञानयोः प्रसिद्धौ इति कश्चित् तन्न विकल्पवृत्तेः सर्वैरनङ्गीकारात् शशशृङ्गादिज्ञानस्य संसर्गांश एवासद्विषयकत्वस्य वक्तुंशक्यत्वात्, माध्यमिकनये घटादिज्ञानस्याप्यसद्विषयकत्वाच्च। असत्त्वं ज्ञानविषयतासमनियतं नवेति तु ज्यायः ज्ञानविषयतायामभिधेयत्वादौच विधेः, घटत्वादौ च निषेधस्य प्रसिद्धेः।

अथ सत्ख्यातिविप्रतिपत्तिः।

भ्रमस्य सन्मात्रविषयकत्वमते भ्रमविषयत्वं प्रमाविषयत्वव्याप्यं नवेति। यत्क्वचित् प्रमितं तदेवान्यत्र भ्रांतिविषयतया भासते इति सन्मात्रविषयतावादिनः। भावो घटत्वादौ, अभावश्च गगनादौ प्रसिद्धः, गगनस्यावृत्तेः सामानाधिकरण्यरूपव्याप्त्यनाश्रितत्वात् गगनादेरपि जनिमुपगन्तृणामतएव तेषां वृत्तिमत्त्वं स्वीकुर्वतां ब्रह्मवादिनां मते गगनादेर्व्याप्तिमत्वसम्भवेऽपि शशशृङ्गादौ निषेधप्रसिद्धिर्मन्तव्या. भ्रमस्य चासत्वादिप्रवृत्तिजनकज्ञानत्वेन निवेशेऽस्याः विप्रतिपत्तेः प्राभाकरेण सह विवादेप्युपयोगः।

अथाख्यात्यन्यथाख्यातिविप्रतिपत्तिः।

अख्यात्यन्यथाख्यातिवादिनोर्विवादे, "ज्ञानत्वं विशेष्यावृत्तिप्रकारकवृत्ति नवा" शुक्तौ रजतत्वं समवायेन, रजतं वा तादात्म्येनावर्तमानमपि प्रकारतया भासते इत्यन्यथाख्यातिवादिनो नैयायिका भट्टादयश्च विधिकोटिमालम्बन्ते, निषेधस्तु प्राभाकरैः सर्वप्रत्यययाथार्थ्यवादिभिः भगवद्रामानुजादिभिश्चाश्रीयते। तत्र भावो भेदाग्रहजन्यायां प्रभाकरेणापि विशेष्यावृत्तिप्रकारताकत्वेनोपगतायामिच्छायां निष्फलप्रवृत्तिजनन्यां वर्तमाने इच्छात्वे प्रसिद्धः। अभावस्तु प्रमात्वे इति विवेकः।

प्रकाराणामवृत्तित्वसिद्धिमादायार्थान्तरं मा भूदतः प्रकारेषु वृत्तिमत्त्वविशेषणं प्रक्षेप्यम् ।

विशेषतोऽपि—

रजतेच्छाजन्यशुक्तिविषयकप्रवृत्तिजनकं रजतज्ञानं शुक्तिविषयकं न वा ।

तादृशं पुरोवर्तिविशेष्यकं ज्ञानं रजतत्वप्रकारकं न वा ।

पुरोवर्तिविषयकरजतविषयकज्ञानयोः प्रभाकरेण पृथक्तया स्वीकृतयोः प्रत्येकं भिन्नत्वेनागृहीतयोः प्रवर्तकयोः पुरोवर्तिविषयकं न रजतत्वप्रकारकं, रजतविषयकं च न शुक्तिविषयकमिति निषेधः प्राभाकरीयः । विधिस्तु नैयायिकादीनां, तैः पुरोवर्तिरजतविषयकैकज्ञानाभ्युपगमात्, ततश्च रजतज्ञाने शुक्तिविषयकत्वसिद्धिरनुभवैक्ये पर्यवस्यति, एवंशुक्तिज्ञाने रजतविषयकत्वसिद्धिरपि ।

प्रथमायां विमतौ तादृशप्रवृत्तिजनकं ज्ञानं प्रभाकरमते स्मृतिः, नैयायिकादिमते च विशिष्टानुभवः, तथा च स्मृतेः पक्षत्वे नैयायिकादेर्बाध, विशिष्टानुभवस्य तत्त्वे गुरुणाऽऽश्रयासिद्धिरुद्भाव्येति विकल्प्यमाने यद्यपि दोषोन्मेषस्तथाप्यवधीर्य तादृशविकल्पकल्पनामुभयमतसाधारणेन तादृशरजतज्ञानत्वेन पक्षतेति न दोषः ।

द्वितीयस्यां विमतौ तु न तादृशशङ्काकलङ्कः—उभयैः पुरोवर्तिविषयकानुभूतेरेवोपगमात् । युक्तं च मतद्वयसाधारण्येन पक्षत्वं-नोचेत् निर्वह्निः पर्वतः पक्षः, सवह्निर्वा—आद्ये बाधोऽपरत्र सिद्धसाधनमिति पक्षतोच्छेदादनुमितिमात्रोच्छेदः कथमुच्छेद्यः ।

अथानिर्वाच्यख्यातिविप्रतिपत्तिः ।

अनिर्वचनीयख्यातौ—ख्यातिनिरुक्तयो दुष्टतानियामकसम्बन्धावच्छिन्नदोषत्वावच्छिन्नाभाववत्यो नवा ।

अत्र ख्यातिशब्देन सर्वाः ख्यातयो ग्रहीतुं शक्यन्ते अख्यातेरपि परीक्षकेषु ख्यातित्वेन व्यवहारात्, परन्तु एकदैकेनैव सह विवादात् विमतः विशेषे एव पर्यवसानं, अन्यथा ख्यातिनिर्वचनं दोषत्वावच्छिन्नाभाववन्नदेति रीत्या, तथाचास्तु अख्यातेर्बहिर्भावो न काचित्क्षतिः। अत्र विधिर्वेदान्तिभिन्नस्य, निषेधश्च वेदान्तिनः। यत्किञ्चिद्दोषाभावस्य वेदान्तिनाऽपि उररीकारात् सामान्याभावनिवेशो विहितः। ननु सामान्यविमतौ अनिर्वचनीयख्यातेरपि पक्षतावच्छेदकाक्रान्तत्वात् तत्र निषेधकोटौ दोषवत्तासाधने कथन्नौपनिषदस्य सिद्धान्तहान्या निग्रह इति चेन्न, चिदतिरिक्तस्य सर्वस्यापि अनिर्वाच्यतामुपगतवतस्तस्या निर्वाच्यख्यातेरपि अनिर्वाच्यत्वादेवोक्तदोषानवकाशात्। न चैवमपि विधिवादिनोऽनिर्वाच्यख्यातिमनभ्युपयतः पक्षतावच्छेदकालिङ्गितायां तस्यां दोषत्वावच्छिन्नाभावसाधनेन परमतानुमतिनिग्रहीति संश्लेपः किमिति नेत्यभिधातव्यम्, अतोऽपि दोषात् विशेषे पर्यवसानस्यैव भणितत्वात्।

वस्तुतस्तु नेयं शङ्काऽपि समुन्मिषति; प्रौढिवादमालम्ब्य सर्वस्यापि ख्यातिजातस्य दोषवैधुर्य्यं साधयतो वेदान्तिमतानुमतिप्रसक्त्यभावात्, नो खलु ते तस्यां (अनिर्वाच्यख्यातौ)दोषराहित्यं जगुः अनिर्वाच्यत्वादेव तस्या अपि। विधिप्रसिद्धिः परस्मिन् ब्रह्मणि, निषेध प्रसिद्धिश्चोभयवादिसम्मते कस्मिंश्चिद्दुष्टे लक्षणे इति। अन्यसम्बन्धेन दोषाभावमादाय दोषनिवृत्त्यै सम्बन्ध विशेषो निवेशितः।

विम ज्ञानं मुख्यविशेष्यातिरिक्तांशे निरुक्तिविषयतावद्विषयकं न वा।

कस्य का कोटिरिति पूर्ववद्, यद्यपि वाङ्मनसागोचरे परस्यां चितौ निरुक्तिविषयताया असम्भवात् तज्ज्ञाने विधिर्न

प्रसिद्धिमर्हति तथापि शून्यवादापत्तिभिया स्वतःसिद्धत्वादिना तस्या अपि निर्वाच्यत्वेनाभ्युपगमात्, रज्जुसर्पः सन्निति ज्ञानमादाय तत्रैव प्रसिद्धिर्बोध्या, असत्त्वेन निर्वाच्यत्वेन असत्त्वप्रकारकनिरुक्तिविशेष्यत्वेनाभ्युपगते तुच्छेऽपि प्रसिद्धिः सुलभा, विमतज्ञानविषये सत्त्वप्रकारकनिरुक्तिविषयताऽभावमभ्युपगच्छता सह विवादे ऽसत्त्वप्रकारकनिरुक्तिविषयतावद्विषयकत्वाभावमात्रं साध्यं;

असत्त्वप्रकारकनिरुक्तिविषयतावद्विषयकत्वाभावं स्वीकुर्वता च सह विवादे सत्त्वप्रकारकनिरुक्तिविषयतावद्विषयकत्वाभावमात्रं साध्यं, तावतैव वेदान्तिनोऽभीष्टसिद्धेः, तथा च निषेधप्रसिद्धिरपि न दुर्लभा, पूर्वस्मिन्साध्ये शून्यतादिज्ञाने ब्रह्मज्ञाने च मतभेदेन साध्यप्रसिद्धिः, बौद्धैरपि शून्यतायाः पारमार्थिकत्वाभ्युपगमात् तस्या असत्त्वप्रकारकनिरुक्तिविषयत्वाभावात्। उत्तरस्मिन् साध्ये तु तुच्छज्ञाने प्रसिद्धिर्बोध्या, सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्यय इति नियतेजागरूकत्वेऽपि वेदान्तिना विशेष्यांशस्येदमादेरपि अनिर्वाच्यत्वाभ्युपगमान्न विधौ सिद्धसाधनं नापि निषेधे बाधः।

ननु "सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यवस्थिते" इति भणितिमुल्लासयता श्रुत्यन्तानुसारिणा कथं नाम न विधौ सिद्धसाधनं देयम्, निषेधे च कथं न बाधो, निर्वाच्यब्रह्मणो विषयत्वात् इति चेन्मैवम्, सर्वस्मिन्नंशे निरुक्तिविषयविषयकत्वस्य विधौ, तदभावस्य चापरकोटौ साधने उक्तशङ्काकलङ्काप्रसरादिति।

एवं विप्रतिपत्त्यन्तरम्

देवदत्ताज्ञानविषयतावच्छेदकत्वं देवदत्तासंवादिप्रवृत्तिजनकज्ञाननिष्ठविषयितानिरूपितमुख्यविशेष्यताऽनिरूपितप्रकारताश्रयवृत्त्यत्यन्ताभावप्रतियोगि न वा। प्रतीतिमात्रजीवनं

शुक्तौ भासमानं रजतादि न ज्ञानात्पूर्वं क्वापि वर्तते किन्तु ज्ञातसत्ताकमेवेति वदतां वेदान्तिनां विधिः, निषेधश्च तदतिरिक्तानाम्।

अत्र यद्यपि—अज्ञातत्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि न वेत्युक्तौ अज्ञातत्वाभावो ज्ञातत्वं भूतकालिकज्ञानविषयत्वं, तस्य च भूयस्सु विषयेषु सर्वमते सत्वेऽपि न सिद्धसाधनं भावरूपाज्ञानस्य साधनात्, तद्विषयत्वाभावस्य च वेदान्त्यतिरिक्तेन केनापि भ्रमविषयेषु रजतादिषु अस्वीकारात्, सुखादावपि न सिद्धसाधनं नैयायिकादिभिस्तेषां मानसप्रत्यक्षाभ्युपगमात् प्रत्यक्षं प्रति विषयस्य कारणत्वात् पूर्वं सत्ताया अवश्यमभ्युपगन्तव्यतयाऽज्ञाततया तेषां सत्त्वावश्यम्भावात्, तथाप्येतावता वेदान्तिनो न किमपि अभिलषितं सिध्यति, ब्रह्मण्येवाज्ञानविषयतायास्तेनाङ्गीकारात् अन्यत्र सर्वत्र तदभावस्य तन्मते सत्त्वेन प्रातीतिक एवाज्ञातसत्ताकत्वस्य विश्रान्तेरतोऽज्ञानविषयतावच्छेदकत्वं पक्षितम् तस्य च व्यावहारिक एव सत्त्वात्, तदत्यन्ताभावः प्रातीतिके सिद्ध्यन् वेदान्त्यभिलषितं पूरयितुं चेष्टते तथापि न पूरयति असतश्चिदनवच्छेदकत्वेन तदवच्छिन्नचितौ अज्ञातताया असत्त्वेनासतो ज्ञानविषयतावच्छेदकत्वाभावात् तत्र पक्षाभावसत्त्वेनार्थान्तरतापत्तेरतो भ्रमविषयस्यैवात्यन्ताभावानुयोगित्वेन निवेशावश्यकत्वाद् भ्रमविषयत्वेन च निवेशे प्रभाकरस्याप्रसिद्धे रसंवादिप्रवृत्तिजनकत्वेन भ्रमं निवेश्य तदीयविषयस्यात्यन्ताभावानुयोगित्वेन निवेशः,

अन्यपुरुषीयाज्ञानविषयतावच्छेदकत्वस्यान्यपुरुषीयभ्रमविषयेऽभावमादायार्थान्तरता माभूदिति पक्षे साध्ये च पुरुषविशेषो न्यवेशि। सर्वं ज्ञानं धर्मिण्यभ्रान्तमितिरीत्या विशेष्यस्येदमादेर्व्यावहारिकत्वेन च तदवच्छिन्नचिति अज्ञातत्वसत्त्वात् तस्याज्ञानविषयतावच्छेदकत्वात्, भ्रमविषयत्वाच्च, तत्र पक्षाभावसाधने बाधात् तद्व्यावृत्त्यर्थं विषयताश्रयेत्यनुक्त्वा प्रकारताश्रयेत्यवाचि, प्रकारता

या इदन्त्वेऽपि सत्त्वात् तस्य च व्यावहारिकतयाऽज्ञानविषयताव-च्छेदकत्वसम्भवान्मा भद् बाधोऽतो मुख्यविशेष्यताऽनिरूपितप्रकारताश्रयस्यात्यन्ताभावानुयोगितया निवेशः, तथा च सति प्रकारताऽसमानाधिकरणविशेष्यताया एव मुख्यतया इदमश्च क्वाप्य-प्रकारत्वाद् मुख्यविशेष्यतायास्तत्रैव वर्तमानतया रजते विशेष्य-ताया रजतत्वनिष्ठप्रकारतानिरूपितायाः सत्त्वेऽपि तादात्म्यसम्ब-न्धावच्छिन्नेदन्निष्ठविशेष्यतानिरूपितप्रकारताया अपि सत्त्वेन प्रकारतासमानाधिकरणतया मुख्यत्वाभावाद् मुख्यविशेष्यतानि-रूपितप्रकारताया अधुनेदन्त्व एव सत्त्वेन मुख्यविशेष्यताऽनिरूपित-प्रकारतायास्तत्राभावात् तद्वारणात् ।

इदं सर्वं "इदं रजतमिति" विशेषाकारं ज्ञानं साध्ये प्रवेश्यैव वक्तुं शक्यते न तु रजतमिदमिति ज्ञानं, तथा सति रजतस्यैव मुख्यविशेष्यताश्रयत्वेन तदनिरूपितप्रकारताया इदन्त्वे सत्त्वेन तत्राज्ञानविषयतातवच्छेदकत्वाभावस्यानिष्टस्य सिद्ध्यापत्त्या बाधोवाऽर्थान्तरं वा भवेत् ।

ननु प्रभाकरसङ्ग्रहोपायं नोपलभामहे, असंवादिप्रवृत्ति-जनकत्वेन सङ्गृह्यतां तदभिमते ज्ञाने, नतु ज्ञानं, विषयतानां निरूप्यनिरूपकभावो हि सति ज्ञानैक्ये समस्ति न तु ज्ञानद्वैते, उररीचक्रे च तेन ज्ञानद्वयं ग्रहणस्मृत्यात्मकं, तथा च ज्ञानद्वयी-मुख्यविशेष्यते इदमि रजते च वर्तेते, इदन्त्वे रजतत्वे च मुख्यवि-शेष्यतानिरूपितप्रकारते, इति मुख्यविशेष्यताऽनिरूपितप्रकारत एव न प्रसिद्धिपथमधिरोहत इति कथमेषा विप्रतिपत्तिस्तेन सह कथायामुपयुज्यतामिति चेद् मोपयुज्यत, पूर्वाभिहितविप्रतिपत्तय एवोपयोक्ष्यन्ते, ज्ञानैक्यं वदद्भिः साकमेवैषा कथायां साफल्य-मावक्ष्यति, तथा च भ्रमत्वेनैव भ्रमो निर्वक्ष्यते ।

ननु वेदान्तिभिरेव ज्ञानैक्यं न स्वीक्रियते, इदमि हि मनो-

वृत्तिविषयतामाचक्षते ते. ब्रुवते च रजतेऽविद्यावृत्तिविषयता-मित्यभिहितदोषोन्मेषात् नैषा विमतिः सुधीधीपद्धतिमध्यास्त इति चेत्कथमेतत्। नो खलु ते प्रभाकरैः सम्मन्यते, आरोपं समर्थयमाना हि तेषां वाचोभङ्ग्यो विलसन्ति, ज्ञानद्वयीमालम्बमाना अपि ते ज्ञानयोरध्यासमभ्युपगत्य ज्ञानयोस्तादात्म्यप्रतीतिमेव प्रवर्तकता-पदेऽभिषिञ्चन्ति, अमुमेव च ज्ञानाध्यासमभिलपन्ति, तस्मादना-विलैवासौ।

ननु बाधग्रहकाले रजतादौ पञ्चासत्त्वमादायार्थान्तरता पि-शाची पृष्ठारूढैवेतिचेत् कदाचिदपि तत्र सतोऽज्ञानविषयतावच्छे-दकत्वस्य त्रैकालिकतन्निष्ठात्यन्ताभावाप्रतियोगित्वात्, अर्थान्त-रतां ददानस्य निरनुयोज्यानुयोगापत्तेः, तत्र भवति च न भवति चेति व्याहतम्। अतएवाव्याप्यवृत्त्यत्यन्ताभावमादाय अनुमानस्य कृतार्थतयाऽर्थान्तरतेति पराहतम्। तस्य प्रमाणागोचरत्वात् संयोगाभावादिस्थलेऽवच्छेदकभेदेन वृत्तस्य भेदसम्भवात्। यदाहुः

"अविरुद्धविशेषणद्वयप्रभवत्वेऽपि विशिष्टयोर्द्वयोः।
घटते न यदैकता तदा सुतरां तद्विपरीतरूपयोः॥" इति॥

कुण्डली–अस्त्री देवदत्त इत्यत्रापि यदा तत्तद्विशेषणालिङ्गि-तस्य देवदत्तस्य भेदः, तदा भावाभावादिस्थले तु कैमुतिकन्याया-गतो भेद इति भावः।

अतएव पूर्वं घटाधिकरणे पुनश्च तदपनयानन्तरं तदधि-करणे तदत्यन्ताभाव इति निरस्तम्। प्रतियोगिसमानाधिकरणे-ऽप्यत्यन्ताभावत्वमिति रुचिप्रमाणकमेव भवेत्। यदाह वर्धमानः कुसुमाञ्जलिप्रकाशे, क्लृप्तसंसर्गाभा वैधर्म्येऽपि अबाधितप्रती-तिबलात् उक्तस्थलेषु सामयिक एवाभावस्तुरीय उपगन्तव्यः, यदि च क्लृप्तविशेषाणां बाधात् सामान्यमभावत्वमपि तत्र स्थातुं नोत्सहते इति गद्यते, तदा संसर्गाभावद्वयेन सादित्वरूपवैधर्म्याँत

ध्वंसोऽपि न प्राणान् धारयितुं क्षमेतेति प्रतिबन्द्या स्थातव्यम्। यदि चाबाधितधं सविशेषप्रतीतिरेव विशेषमनादायापर्यवस्यन्ती सामान्यं बलादानयति। तर्हि प्रकृतेऽपि अन्यसंसर्गाभाववैलक्षण्येऽपि सामयिकोऽभाव एवेतितुल्यम्। तदेतदर्थतोऽपाठि।

यदि चोक्तस्थलेषु अत्यन्ताभाव एवेत्याग्रहः तत्तज्ज्ञानकालीनसम्बन्धेन च प्रतियोग्यसामानाधिकरण्यमपि न दुष्यति तदा प्रकृतेऽपि सम्बन्धविशेषमन्त्रेणैवार्थान्तरतापिशाची उत्सारणीया, तथा च देवदत्तज्ञानविषयतावच्छेदकत्वं देवदत्तभ्रान्तीयमुख्यविशेष्यतानिरूपितप्रकारताश्रयनिरूपितसम्बन्धविशेषावच्छिन्नवृत्तिताकात्यन्ताभावप्रतियोगितावन्न वेति फलितम्।

सदसत्ख्यातिविप्रतिपत्तिः।

सद्भेदासद्भेदौ किञ्चिन्निष्ठव्यासज्यवृत्तिधर्मानवच्छिन्नात्यन्ताभावप्रतियोगिनौ नवा। विधिर्वेदान्त्येकदेशिनामनिर्वाच्यवादिनां नागेशादीनाम्, निषेधस्तु वेदान्त्यादीनाम्। ब्रह्मणि तुच्छे च सदसद्भेदयोरुभयत्वावच्छिन्नात्यन्ताभावसत्त्वात् विधौ सिद्धसाधनं, निषेधे च बाधो मा भूदिति व्यासज्यवृत्तिधर्मानवच्छिन्नत्वमभावे व्यशेषि। एवं च ब्रह्मतुच्छभिन्ने जगति प्रातिभासिके व्यावहारिके च सदसदसत्त्वं पर्यवस्यति, इदमेवानिर्वाच्यत्वं। अधिष्ठानगतसम्बन्धस्य बहिरनुत्पन्नेऽसत्येव बुद्धिसति शुक्तिरजतादौ समारोपः। अविद्ययाऽपरोक्षज्ञानात्परस्यैव रजतादेरपरोक्षतोपपत्तौ जनिस्वीकारे गौरवमिति तदाशयः।

एवं विप्रतिपत्त्यन्तरमपि-

रजतत्वविशिष्टं तादात्म्यसम्बन्धेन रजतत्वविशिष्टसम्बन्धितया ज्ञायमानसर्वनिष्ठत्रैकालिकसंसर्गाभावीयतादात्म्यसम्बन्धावच्छिन्नरजतत्वावच्छिन्नप्रतियोगिताविशिष्टं न वा।

विधिर्वेदान्तिनः, रजतत्वावच्छिन्नप्रतियोगिताकघटाभावे प्रसिद्धिः, प्रातीतिकव्यवहारिकसाधारणरजतादौ अनिर्वाच्यत्व सिद्ध्यर्थं चैषा विप्रतिपत्तिरितिबोध्यम् ।

रजतत्वं स्वावच्छिन्नवत्वेन प्रतीयमानयावन्निष्ठाभावीयत्व, स्वावच्छिन्नत्वेतिसम्बन्धद्वयेन स्वविशिष्टप्रतियोगितासमानाधिकरणं नवेतितु पूर्वस्यैव विट्ठलेशीयो निष्कर्षः ।

तत्र प्रथमसम्बन्धानुक्तौ रजतानधिकरणे रजतत्वावच्छिन्नाभावसत्त्वात्सिद्धसाधनं, द्वितीयसम्बन्धानुक्तौ च घटत्वेन रजताभावमादाय सिद्धसाधनमिति सम्बन्धद्वयोपादानम्—

नच प्रातीतिकरजतत्वेन व्यावहारिकरजताभावमादाय सिद्धसाधनव्युदासाय स्वसामानाधिकरण्यसम्बन्धोऽपि देय इति शङ्क्यम् प्रातीतिकव्यावहारिकोभयसाधारणरजतत्वस्वीकारेणैव प्रातीतिकेऽपि प्रवृत्त्याद्युपपत्त्या प्रातीतिकरजतत्वस्य शशविषाणायमानत्वात् । प्रत्युतोक्तसम्बन्धस्य दाने साध्यप्रसिद्धेर्दुर्लभत्वापत्तेः । नचोभयसाधारणरजतत्वस्वीकारे प्रातीतिकरजतेनापि कटकादिर्निर्मीयेतेतिवाच्यम् फलबलेन व्यावहारिकत्वविशिष्टस्यैव रजतस्य कारणत्वं कटकादिनिरूपितं कल्प्यते, प्रातीतिके च व्यावहारिकत्वाभावान्न दोषः ।

इति विप्रतिपत्तयः ।

---

# अथ साकारख्यातिनिरूपणम् ।



अस्ति तावद्विज्ञानं स्वप्रकाशं, कदाचिदपि संशयाद्यगोचरत्वात्, नो खलु घटोऽस्वप्रकाशः कदाचिदपि संशयाद्यगोचरः, तथा च स्वप्रकाशत्वं विनानुपपन्नं जिज्ञास्यत्वेऽप्यपि संशयाद्यगोचरत्वं तदनाक्षिप्य न शाम्यति, अनुव्यवसायधाराविश्रान्तेः सुषुप्त्याद्यभावप्रसङ्गेनावश्याभ्युपगन्तव्यत्वेन नानुव्यवसायमभ्युपगत्यापि उक्तो हेतुः शक्योपपाद इत्यन्यत्र विस्तरः । तथा च शुक्तौ जायमानमिदं रजतमिति ज्ञानमपि स्वात्मानमेव प्रकाशयेत् नत्वतिरिच्यामानमपि स्वापेक्षया, नहि घटे भासमाने पटो नियमेन भासते, भासमाने चेदं रजतमिति ज्ञाने रजतं नियमेन भासमानं तदात्मकमेव भवेत्, नोचेद् घटादिभिः किमपराद्धं, ते तत्र किमिति न भासेरन्, इदं रजतमिति ज्ञानेन साकं रजतस्य घटाद्यपेक्षया सम्बन्धविशेषानाकलनात् । संविज्जनकत्वंहि विषयत्वं तच्च रजते विशेषसम्बन्धो, न घटादाविति चेत् नूनमिन्द्रियमपि संविं जनयत् विषयतयैव वाञ्छसि किम्, तस्मादतिव्यापकोऽयं सम्बन्धो न रजतभाननियामकः, परोक्षस्थले च किं कुर्याः, नहि तत्र विषयस्य जनकत्वम् । यानुमितिर्वह्निनिरूपितव्याप्त्याश्रयविषयकपरामर्शजन्या सा तद्विषयिकेत्याद्यननुगतमेव नियामकं वाच्यमिति चेत् पक्षो न विषयः स्यात् । तद्विषयता नैव स्वीक्रियते इति चेत्, एवं तर्हि धूमहेतुकानुमितौ वह्निसंयोगालोकादीनामपि विषयतापत्तिः, धूमस्य तन्निरूपितव्याप्त्याश्रयत्वात् । याऽनुमितिः

स्वहेतुभूतपरामर्शविषययन्निरूपितव्याप्तीत्यादिकृतेंऽशत आत्माश्रयः, कारणतावच्छेदककोटौ कार्यस्य निवेशादिति रजतस्यैव तत्र ज्ञाने भासमाने भाने किन्नाम नियामकं भवेदन्यदतोऽभेदात्। रजतमहं जानामीति तु प्रत्ययत्रयं नत्वेकोऽयं प्रत्ययः, येन तद्बलेन ग्राह्यग्राहकभावस्तयोः समर्थ्येत।

यदि च स्थायित्वं भवेत्, अभ्युपगम्येतापि ज्ञानक्रियानिमित्तो विषयविषयिणोः सम्बन्धः—तत्तु न विचारसहम्, स्थिरं हि उत्पद्यमानं समर्थं वाऽसमर्थं वा नश्वरं वाऽविनश्वरं वा उत्पद्येत, न प्रथमः, समर्थस्य कालक्षेपायोगात् युगपदेव सर्वं कर्तव्यं कुर्यादेव, समर्थस्वभावस्य च सहकार्यपेक्षावाचोयुक्तेरुपहासास्पदत्वात्, सहकारिभिरतिशयानाधाने तेषां वैयर्थ्यात्, अतिशयाधाने तु विरुद्धधर्माध्यासेन सातिशयस्य नूतनस्यैवोत्पत्तेः सिद्धः क्षणभङ्गः, असमर्थस्वभावं त्वपेक्ष्यापि न कुर्यात्, यदि नश्वरं तर्हि नाशस्वभावत्वादेव प्रतिक्षणं नश्येदिति मच्चरणशरणेन रक्षितोसि, चतुर्थे तु न कदापि नश्येद् गगनादिवत्, तस्मात् "कुशूलस्थं बीजं यद्यङ्कुरसमर्थं स्यात्, अङ्कुरं जनयेत्, न जनयति तस्मान्न समर्थम्" इति प्रसङ्गविपर्ययाभ्याम्, एवं "क्षेत्रपतितं यद्यसमर्थं भवेन्नाङ्कुरं भावयेत्, भावयति तु तस्मान्नासमर्थ" मिति प्रसङ्गविपर्ययाभ्यां च कुशूलक्षेत्रस्थयोर्भेद इति क्षणिकत्वसिद्धिः।

सति च क्षणिकत्वे जानातिक्रियानिमित्तो न विषयविषयिसम्बन्धो निरूपणार्हः, नो खलु क्षणिकस्य क्रियोत्पत्त्यतिरिक्ता सम्भविनी नाम, तस्मादन्यस्य सम्बन्धस्याशक्यनिरूपणत्वे स्वाभाविकोऽभेद एव सम्बन्धोऽभ्युपेयः, नो चेत् कथमपि रजतादेर्भानं न स्यात्, नहि तद्भानार्थं ज्ञानाभेदं विनाऽन्या गतिरस्ति। अतो रजतादेःप्रतिभानस्यान्यथानुपपत्तिरेव तस्य

संविदोऽभेदमाक्षिपति, यदाहुः—"प्रमाणवत्त्वादायातः प्रवाहः केन वार्यते।"

"अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका।
पिनष्टि दृष्टवैमत्यं सैव सर्वबलाधिका॥"

सेयमर्थापत्तिरस्मन्मतेऽनुमानमेव। "सहोपलम्भनियमादभेदो नीलतद्धियोः।" तदेतत्संगृहीतं वृद्धैः—

"स्वप्नधीसाम्यतो बुद्धेर्बुद्ध्यार्थस्य सहेक्षणात्।
तद्भेदेनानिरूप्यत्वात्, ज्ञानाकारोऽर्थ इष्यताम्॥" इति

जाग्रत्प्रत्ययाः निरालम्बनाः–स्वांशातिरिक्तालम्बनशून्याः प्रत्ययत्वात् स्वप्नप्रत्ययवत्। अर्थत्वेनाभिमतो बुद्धेरभिन्नः, नियमेन तया सहैवोपलभ्यमानत्वात् यद्येन सह नियमेनोपलभ्यते तत्तेनाभिन्नं यथैकेन चन्द्रमसा सह नियमेनोपलभ्यमानोऽपरश्चन्द्रस्तेनाभिन्नः।

विमतं ज्ञानाभिन्नं ज्ञानभेदेनानिरूप्यत्वात् ज्ञानवत्, बौद्धमते स्थित्वापि उदाहरणोपनयातिरिक्तावयवप्रयोग एतन्मार्गक्षुण्णत्वहेतुक एव। ज्ञानभेदेनानिरूप्यत्वञ्च साध्यं, तथाहि, ज्ञानभिन्नत्वे हि कोऽयं पटः? न तन्त्वतिरिक्तः, नहि तदतिरिक्ततया गौरिवाश्वातिरिक्ततया प्रतीयते, एवं तन्तवोऽपि नांश्वतिरिक्ततया प्रथन्ते, एवमंशवोपि स्वावयवातिरिक्ततया, तस्मात् पट इति, तन्तव इति, अंशुरिति सर्वापि धीर्मृषैव। तदेवमापरमाणु सर्वेष्वपि पदार्थेषु निरूप्यमाणेषु याथात्म्याप्रतीतेर्न स्थविष्ठो न स्थूलो न क्षुद्रो न क्षोदिष्ठो वाऽस्ति पदार्थभेद इति सर्वा धियोऽबाह्यमपि स्वस्वरूपं बहिष्ठेन विषयीकुर्वत्यो भ्रान्तिरूपतामेवालम्बन्ते, तदुक्तम्—

बुद्ध्या विविच्यमानानां स्वभावो नाऽवधार्यते।
अतोनिरभिलप्यास्ते निस्स्वभावाश्च देशिताः॥

निस्स्वभावाइति ज्ञानातिरिक्तस्वभावशून्याः । बाह्यहेतुशून्यत्वेऽपि च स्वप्नादिष्विव वासनावैचित्र्यनिबन्धनमेव विज्ञानवैचित्र्यमुपपत्स्यते ।

अपि च विज्ञानविषयतयाऽभिमतो बाह्यो न परमाणुः, स्थौल्यमवगाहमाना धीः कथमिव परमाणुमालम्बेत, यदि चेदं स्थौल्यं ज्ञानस्यैव धर्मः, तदा न विवदामहे, यदि ज्ञानकाले रूपपरमाणूनामेव निरन्तरमुत्पन्नानामेकज्ञानविषयतामापन्नानां स्थौल्यं धर्मः, परमाणूनां प्रत्येकं सूक्ष्मत्वेऽपि सांवृतं स्थौल्यं प्रतीतिगोचर इत्युच्यते, तदापि गन्धादिपरमाणुभिरन्तरितत्वात् नैरन्तर्यावभासस्य भ्रान्तित्वं न शक्यवारणम्, तस्माद्बाह्यस्य परमाणुत्वे प्रत्यक्षप्रमाणगम्यता न शक्यसमर्थनेति । यदि च बाह्योऽर्थोऽभ्युपगम्यते परमाणुसमूहस्तदाऽपि परमाणुभ्योऽभेदे पूर्वाभिहितदोषान्निर्मोको न, भेदे च गवाश्वयोरिव तादात्म्यं न भवेत्,समवायस्य चानवस्थादोषग्रस्तत्वात्स्वरूपेण सम्बद्धत्वस्य परिभाषामात्रत्वात् न तमभ्युपगम्यावयवावयव्यादिभावकल्पनयाऽपि निस्तारः, अवयविखण्डनयुक्तयश्चात्रोद्भावनीया ।

अवयवी व्यासज्यावयवेषु वर्तते, अव्यासज्य वा, आद्ये यावदवयवप्रत्यक्षतां विना तत्प्रत्यक्षता न स्यात्, नहि घटद्वयप्रत्यक्षं विना तद्गतं द्वित्वं व्यासज्यवृत्ति प्रत्यक्षं भवति । अव्यासज्य तत्तदवयवेषु वर्तने पुच्छेनापि स्तनकार्यं कुर्यादेवेति रीत्याऽवयवी निरसनीयः ।

तस्माद्बाह्यस्य प्रपञ्चस्य ज्ञानानात्मकतया निरूपयितुमशक्यत्वात् प्रमितत्वेनाभ्युपगमविषयस्यापि तस्य ज्ञानात्मकत्वे एव स्वीकरणीये भ्रान्तिविषयत्वेनाभ्युपेतानां ज्ञानात्मकतायां किं छिद्यते । बहिष्ट्वकल्पनाया गौरवपराहतत्वात् ।

रजतं संविद्रूपं सम्प्रयोगमन्तरेणापरोक्षत्वात् संविद्वदित्यनुमाऽपि रजतस्य ज्ञानात्मकतायां मानम् । अपि च, अयं घट इति ज्ञानानन्तरं स्मृतिर्जायते ज्ञानविषयेति ज्ञानानुभवोऽपेक्षणीयः, निराकारस्य चास्मरणात् अनुभवोऽपि साकारस्यैव, आकारश्चैकोऽनुभूयते न तु द्वौ, एवं च स आकारो ज्ञानस्य वाऽर्थस्य वेति विचारणायां ज्ञानस्यान्वयव्यतिरेकाभ्यां, बाह्यस्य स्वप्ने व्यभिचारात्, द्विचन्द्रादिबोधस्थले च चन्द्रे द्वित्वबाधात् ज्ञानस्यैव तद्वाच्यम्, एवमेकव्यक्तावपि दारा इति बहुवचनप्रयोगो ज्ञानाकारतां विना न सेद्धुमर्हति ।

ननु यद्यस्त्येव रजतं ज्ञानकारस्तर्हि नेदं रजतमिति सर्वानुभवसिद्धस्य बाधस्य बाधकत्वमाशामोदकायत इति चेत्, मैवम्, इदं रजतमित्यत्र द्वयं प्रतीयते, स्वप्रकाशत्वाज्ज्ञानस्वरूपं, पुरोवर्तिद्रव्यञ्च, रजतत्वमपि तृतीयम्, तत्र नेदं रजतमिति बाधग्रहेण पुरोवर्तिनि रजतत्वे प्रतिषिद्धे सति अर्थात् ज्ञानस्यैव तत्परिशिष्यते, अन्यस्य तत्राविषयत्वात्, अत एवोच्यते–'बाधग्रहस्य रजते इदन्तामात्रनिषेधेनैवोपपत्तौ रजतनिषेधस्यापि तद्विषयत्वे गौरवात् रजतमान्तरमेवावतिष्ठते' इति, नहि बाह्यस्य ज्ञानातिरिक्तस्यासम्भवग्रासे सति अन्यथाख्यात्यादिमतेनान्यदेशस्थस्यात्र प्रतीतिरिति कुकल्पनावकाशः, ज्ञानस्य च सर्वानुभवसिद्धत्वात्तेनैवोपपत्तौ असद्भानकल्पनमपि शशशृङ्गायितम् । तस्मात् विज्ञानमेवानादौ संसारे तत्तदाकारेण वासनावैचित्रीवशंवदीभूय प्रथते इति सिद्धमात्मख्यानमिति ।

इदन्त्ववधेयम्–यद्यपि सौत्रान्तिकवैभाषिकमतग्रन्था विशेषत उपलब्ध्यगोचरास्तथापि ताभ्यामप्यात्मख्यातिरेव स्वीक्रियते भ्रमस्थले, अन्यत्र तु बाह्यं जगत्स्वीक्रियते एव, तदुक्तं वाचस्पतिमिश्रैः–"सौत्रान्तिकनये तावदस्ति बाह्यं वस्तुसत्, तत्र ज्ञानाकार-

स्यारोप" इति । वैभाषिकमतेऽप्येतत्तुल्यमिति कल्पतरुपरिमलादितः प्रतीयते । विशेषस्त्वियान्—अधिष्ठानं शुक्तिशकलादि सौत्रान्तिकनयेऽनुमेयं, वैभाषिकनये तु प्रत्यक्षम् । अध्यस्तं तु ज्ञानाभिन्नत्वात्प्रत्यक्षमेवोभयमते, नागेशेनापि मञ्जूषायां "सौत्रान्तिकनये ज्ञानधर्म एव भासत इत्युक्तम्, तस्यान्यथाख्यातिवादित्वं परमन्यत्रान्यारोपसाम्याज्जगादेत्यन्यदेतत् ।

अथ साकारख्यातिखण्डनम् ।

तदेतन्नानुभूतिपथमवतरतीत्यपरे न क्षोदक्षमं मन्यन्ते । तथाहि, अत्रानुमानभङ्गः सङ्गृहीतो "वैधर्म्याच्च न स्वप्नादिव" दिति सूत्रार्थं विशदयद्भिर्मधुसूदनसरस्वतीभिः—

"बाधेन सोपाधिकताऽनुमाने, उपायभावेन सहोपलम्भः ।
सारूप्यतो बुद्धितदर्थभेदः, स्थूलार्थभङ्गे भवतोऽपि तुल्यः" ॥इति॥

भवतु तावद्विज्ञानं स्वप्रकाशं तच्चास्माभिर्नित्यं समर्थयिष्यते इति विशेषः । इदमहं जानामीति धीस्तावज्जायते सा चेदम्पदार्थस्य ग्राह्यत्वं विना नोपपद्यते, न खल्वनुभवोऽपि नोपपाद्यः, अवहेलनीयत्वापत्तेरुक्तत्वात् । न खलु भिन्नास्त्रयो विकल्पाः परस्परवार्तानभिज्ञाः सम्बद्धतयाऽवगन्तुं शक्याः, एकदैव च "अहमिदं जानामीति" विषयविषयित्वमवगमयन् जायते प्रत्ययः, नतु क्रमशोऽहमिति वा, इदमिति वा, जानामीति वा । तस्माद्यथानुभवं विज्ञानाद्भिन्नमर्थक्रियायोग्यं वस्तु स्वीकर्तव्यम् । प्रत्यभिज्ञापि पदार्थानामैक्यं समर्पयन्ती कथं साहसमात्रेणान्यथयितव्या । नो खलु सादृश्यनिबन्धना सा, स्वतःप्रमाणानां धियां प्रमात्वस्य बाधकैकापोद्यत्वात्, न चात्र बाधकमुपलभामहे, न च समर्थासमर्थादिविकल्पो बाधकः, समर्थ एवोत्पद्यते इति ब्रूमः, तादृशोऽपि च सहकारिणमासाद्यैव कार्यं जनयति, एतादृशमेव तस्य समर्थत्वं यत्सहकारिणमासाद्यैव कार्यजननं नाम । योग्यता तु उत्पन्नमात्रस्यैव ।

सहकारिसहितात्तस्मादेव कार्योत्पत्तेर्दर्शनात्, केवलात्सहकारिण-स्तस्मादेव वा केवलात् कार्यं भवत्विति शङ्कानवकाशात् ।

जनकत्वाजनकत्वलक्षणविरुद्धधर्माध्यासादपि न वस्तुभेदः, नहि धर्मो धर्मिणोऽभिन्न एव येनैव स्यादपि तु भिन्नाभिन्नः, न च तयोर्विरुद्धत्वात्कथमित्थमिति वाच्यम्, विरुद्धमिति ह्यप्रमाणिके प्रत्ययः, इदं तु प्रमाणसिद्धम्, सामानाधिकरण्यं हि सत्यपि भेदे घटपटयोः सत्यपि चाभेदे एकत्र घटे नानुभूतचरं भेदाभेदे एव पर्यवस्यति, तस्माद्धर्मादयो धर्म्यादिभ्यो भिन्नाभिन्नाः समानाधिकृतत्वात् व्यतिरेके घटपटवत् घटवच्चेति प्रमाणसिद्धौ भेदाभेदौ, तथा च कथं धर्मभेदेऽपि धर्मिणा भेद आलम्बनीयः, सत्यपि भेदे तस्यैव धर्मो नान्यस्येत्यत्र तु वस्तुस्वभाव एव शरणीकरणीयः । नश्वरानश्वरत्वविकल्पेऽपि नश्वर एव जायत इति वदामः, किन्तु नश्वरत्वं नाशयोग्यत्वं तच्च सति नाशकारणे फलमुपधत्ते ।

यत्राभिदधुर्वाचस्पतिमिश्राः-" नहि तण्डुलाः पचेलिमा इति विनैव दहनसलिलसंयोगप्रचयभेदं विक्लिद्यन्ति, काष्ठानि वा भिदेलिमानीति कुठाराभिघातमन्तरेण दलन्ति" इति, न च तादृशप्रचयविशेषविशिष्टा एव तण्डुला पचेलिमा नत्वन्ये इति शङ्क्यम्, क्षणभङ्गभङ्गात् ।

न तु नाशस्वभावत्वं नश्वरत्वं, तद्धि नाशस्वरूपत्वमेव तथा च सति नाशस्यानाशे घटोऽपि न नश्येत्तयोरैक्यात् तथा च द्वितीयादिषु क्षणेष्वपि अनुवर्तेतैव घटः, नाऽपि च नाशप्रतियोगिनोरैक्यं शङ्कास्पदतामप्यर्हति, तस्मात्प्रत्यक्षबाधितमिदमनुमानम् ।

ब्रह्मज्ञानेतरबाधितत्वञ्चोपाधिः, स्वप्नादिप्रत्ययेषु तथा दर्शनात्, अदर्शनाच्च जाग्रत्प्रत्ययेषु, अपि च प्रत्ययत्वहेतुविषयकज्ञानं त्वया

प्रतिपाद्ये वादिनि जनयितव्यं, तज्ज्ञानं सालम्बनं वा निरालम्बनं वा आद्ये बाधः, चरमे स्वरूपाऽसिद्धिः।ज्ञानात्मकं प्रत्ययत्वमस्तीति चेत्, कथमेतद्भवताऽहं प्रतिपाद्यः एतयैवानुमित्येति तु नार्हति वक्तुम्, अन्योऽन्याश्रयापत्तेः, सति हेतुज्ञान एषाऽनुमितिः,सत्याञ्च तस्यां हेतुज्ञानम्, तस्माद्यत्किञ्चिदेतत् । सहोपलम्भनियमोऽप्यन्यथासिद्धः, स एव हि हेतुः साध्यं साधयितुं क्षमो, यस्तं विना न निर्वहेत्, अयं तूपायभावमादायाऽप्युपपत्स्यते, यथाहि प्रभा रूपग्रहे उपायतामश्नुवत्यपि न रूपात्मिका, तथा ज्ञाने उपायभूतो विषयो ज्ञानग्रहविषयोऽपि न ज्ञानमिति स्यात्. विषयस्य ज्ञानोपायत्वन्तु विषयोपरागेणैव ज्ञानग्रहस्य जायमानत्वम् ।

अथवा मिथ्याभूतो यो विषयतारूपः सम्बन्धःस एवोपायो ज्ञानग्रहस्य स्वविषयविषयकत्वनियामकः, तस्य विषयेषु विद्यमानत्वेन सहोपलम्भ उपपाद्यताम्, न तु तस्यैक्यसाधकत्वम् । यदि च लाघवमेव परमीक्ष्यते ज्ञानाज्ज्ञानाऽतिरिक्तत्वाभावे विषयस्य, तदपि न साधीयः, स्थूलार्थभङ्गेऽर्थसारूप्यमेव ज्ञानानां प्रामाण्यमिति वदतः सौत्रान्तिकस्य यथा ज्ञानार्थयोरत्यन्तभेदस्तथा योगाचारेणाऽपि स उपगन्तव्य एव, नहि सारूप्यमभेदे सम्भवि नाम, त्वयाऽपि च ज्ञानविषययोस्तादात्म्यमभ्युपगतमेव किन्त्वभेदे तादात्म्यं नोपपद्यत इत्यस्य निवेदितत्वात्सारूप्यमङ्गीकार्यमेव, कल्पितभेदस्वीकारे च तादात्म्यमपि तादृशमभ्युपगम्यताम् ।

यदि चाऽधुनाऽपि लाघवं परमाद्रियसे तर्हि ज्ञानोत्पत्तिनाशकल्पने गौरवात्किमिति न बिभेषि, तस्मादेकं नित्यं स्वप्रकाशं ज्ञानमभ्युपगम्य तत्र कल्पितमनिर्वाच्यं प्रपञ्चं स्वीकुरु, स चावयवावयव्यादिरूपेण यथातथाऽस्तु नास्यां काकदन्तपरीक्षायामस्माभिर्निर्बन्धो विधेयः सर्वथापि तु तस्यानिर्वाच्यत्वमेव, अनुभवोऽ-

पि चैवमनुरोत्स्यत एव, सर्वथा प्रपञ्चस्य ज्ञानातिरिक्तत्वेनानुभूतिगोचरस्यानपलापात् ।

सम्प्रयोगमन्तरेणापरोक्षत्वन्तु नैयायिकैरलौकिकसन्निकर्षस्वीकारात्स्वरूपासिद्धम् , असंविदाकारे बाह्यत्वे व्यभिचारि च, द्विचन्द्रादिभ्रमस्थले च द्वितीयचन्द्रोत्पत्तेरग्रे उपपादनीयत्वान्न ज्ञानाकारता, दाराः इत्यादि बहुवचनन्तु तथैव साधुत्वानुशासनात्, वस्त्वैक्येऽपि अवयवादिगतबहुत्वस्यावयविन्युपचाराद्वा शक्यसमर्थनमिति न साकारवादसहकारि । एवञ्च नेदं रजतमिति प्रत्ययो रजतमेव निषेधति, नतु रजत इदन्त्वम्-तथाहि सति, रजते ज्ञानात्मकत्वं त्वयोपपाद्यं तच्च पूर्वाभिहितयुक्तिभिर्बाधितम्, यदि च कदाचिदपि रजतस्य ज्ञानात्मत्वमनुभवपथमवतरेत् तदा पारिशेष्याददि इदमि रजतात्मतां प्रतिषेध्य ज्ञाने रजतात्मताऽध्यवसीयेत, नत्वेवं कदाचिदपि "अहं रजतमि"ति प्रतीतिर्जायते, तस्मात्प्रमाणाभावान्न ज्ञानाकारता भ्रमगोचरस्येति सिद्धम् ।

असत्संसर्गख्यात्युपपादनम् ।

द्वितीयविप्रतिपत्तिस्तु असत्तादात्म्यविषयतामभ्युपेत्य प्रवृत्ता, तत्रनिषेधकोटिः खण्डिता, विधिकोटिःप्रथममित्थमुपपाद्या, तथाहि, पुरोवर्तिनं रजततया प्रत्येमीत्यनुभव पुरोवर्तिरजतयोस्तादात्म्यप्रतीतौ मानम्, तादात्म्यञ्च तदसत्, नहि पुरोवर्तिशुक्ते रजतेन सह तादात्म्यमस्ति तस्मादसदेवभासते। केवलस्यासतो मा नामास्तु भानम्, सदुपरक्तस्य तु तन्न दण्डवारितम्, सतो हीदृशो महिमा यदसदपि स्वोपरक्ततया भासयति, केवलस्यासतो हि भवज्ज्ञानमिन्द्रियैर्वा भवेदनुमानादिना वा,न तावत्प्रथमः कल्पः,विषयसन्निकृष्टतयैव ज्ञानं जनयितुमीशते इन्द्रियाणि. नचासता सन्निकर्षः सम्भाव्योऽपि,उपस्थितस्यैवार्थस्य च संसर्गोलिङ्गादिभिर्बोधनीयः,

नोचेदतिप्रसङ्गं को वारयितुं क्षमेत, व्याप्तिशक्त्योर्ग्रहश्च नासति सम्भवति, असम्भवंश्च कथमुपस्थितिं जनयेत, अजाता चोपस्थितिः कथमनुमितावुपयुज्येत, तस्मात्केवलमसन्न भासते।

वासनैव भासयतिवति चेत् सा निरपेक्षा न समर्था भासने, सापेक्षत्वे तु सोऽपेक्ष्यो बाह्य एवेति। एवैव च वाचस्पतिमिश्रसम्मताऽन्यथाख्यातिः, अभ्युपजग्मुश्चैनां कुमारिलभट्टा अपि, यज्जगदे तैरेव—

"तस्माद्यदन्यथा सन्तमन्यथा प्रतिपद्यते,

तन्निरालम्बनं ज्ञानमभावालम्बनञ्च तत्।"

निराल० वा० ११७श्लो०।

यस्मादेवं बाह्यं समर्थितं तस्माच्छुक्तित्वेन सन्तं रजतात्मना ग्रहणादेव विज्ञानस्य निरालम्बनत्वं, नत्वात्मविषयकत्वेन। अभावेत्यस्यासदित्यर्थः, अतएव क्वचित्तथैव पाठः, अत्र ख्याताववनुमानं प्रमाणमग्रे स्फुटीभविष्यति। जैनैरप्येषैव ख्यातिःस्वीक्रियते इति ज्ञेयम्, उक्तञ्चैतत्स्याद्वादमञ्जरीटिप्पणे इति।

इदमत्रबोध्यम्—"सदसत्ख्यातिर्बाधाबाधा" दिति सांख्यसूत्रानुसारिभिर्विज्ञानभिक्ष्वादिभिः सदसत्ख्यातिशब्देन व्यवह्रियमाणाऽपि असत्संसर्गख्यातिरेव, यतस्तैरेवागादि—"स्वरूपेणाबाधः सर्ववस्तूनां नित्यत्वात्, संसर्गतस्तु बाध इति"। न च सत्संसर्गस्य बाधस्तस्मादसन्नेव सः। एवं "रजतं वणिग्वीथीस्थरूपेण सत्, शुक्त्याध्यस्तरूपेण चासत्" इत्यप्युक्तम्, तन्नयेऽभावस्याधिकरणात्मतया रजतासत्त्वं शुक्तिनिष्ठं शुक्त्यात्मकमिति रजतमसदेव शुक्त्यात्मना वर्तते इति पर्यवस्यति।

भट्टपादानामपीयमेव कथा, तैः "भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात्। स्वरूपपररूपाभ्यां सर्वं सदसदात्मकमिति" स्वीकारात्, अधिकरणेनचाभावस्यतादात्म्यमेव संसर्गो भेदा-

भेदरूपम्, अत एवात्यन्ताभेदोपगन्तुः प्रभाकरात्तन्मतभिदा। अतएव—"ननु भावादभिन्नत्वात् सम्प्रयोगोऽस्ति तेन चेति श्लोकार्धेनेन्द्रियेणैवाभावग्रहणसम्भवादनुपलब्धेः पृथक्प्रमाणत्वमाक्षिप्य "न ह्यत्यन्तमभेदोऽस्ति रूपादिवदिहापि न, धर्मयोर्भेद इष्टो हि धर्म्यभेदेऽपि नःस्थिते" इत्यनेन श्लोकवार्तिके तादात्म्यमुपापीपदन्। अतएव च कुसुमाञ्जलौ वर्धमानेन, "भट्टानामधिकरणे विशेषणत्वं नाभावस्य किन्तु तादात्म्यमि"त्यभ्यधायि, तस्माच्छुक्त्यात्मना रजतमसद्वर्तते एव। जैनैरपि परद्रव्यक्षेत्रकालस्वभावैर्वस्तुनोऽसत्त्वोपगमात्, वस्त्वनेकान्तवादस्य च भट्टैरपि "इहानैकान्तिकं वस्त्वित्येवं ज्ञानं सुनिश्चितमि"त्यभिदधद्भिर्वनवादे स्वीकारात्, "भावाभावात्मकत्वाद्वस्तुनो निर्विषयो ह्यभाव" इति जैनैरपि कथनाच्चैतादृशविषयेषु प्रायो जैनभट्टपादसाम्यमेव, तस्माज्जैनानामप्येषैव ख्यातिरिति मन्महे।

किन्तु रजतमसच्छुक्त्यात्मकमिति नैयायिकै नाभ्युपेतम्, तैरभावस्याधिकरणात्मताऽनङ्गीकारादित्याशयेन "नान्यथाख्यातिः स्ववचोव्याघातदिति" सांख्यसूत्रेणान्यथाख्यातिरखण्डि। असतो भानमसम्भवीति स्ववचो व्याहन्यते तत्रासतो रजतस्य भानाभ्युपगमे इति तत्सूत्राशयः। भट्टादिनये तत्रासतोऽपि रजतस्य शक्त्यात्मना वर्तमानत्वान्नैतत्खण्डनविषयतेति, हट्टस्थरजतस्य शुक्तिसंसृष्टतयाऽवृत्तेस्तु संसर्गासत्त्वमितिध्येयम्। एवं सूक्ष्मनिरीक्षणे मतैक्यपर्यवसानेऽपि आपाततो भेदप्रसिद्धिस्त्वेतेनाशयेन बोध्या— हट्टस्थरजतमत्रभासते इति वाचोभङ्ग्या संसर्गासत्त्वादसत्ख्यातिव्यपदेशः, शुक्तावसद्रजतं शक्त्यात्मना सदेव भासत इति वाचोभङ्ग्या च सदसत्ख्यातिव्यपदेशः।

इयं समीक्षा विज्ञानभिक्षुभाष्यानुसारेण, किन्तु मञ्जूषायां "सदसत्ख्यातिर्बाधाबाधाभ्यामि"तिसूत्रस्य नागेशकृतव्याख्या-

नस्य "यावद्विशेषदर्शनमबाधः, तदुत्तरश्चबाधः, अधिष्ठानगतसत्त्वा-रोपेण तु यावद्विशेषदर्शनं बहिः सत्त्वेन प्रतीतिर्द्विसद्रजतस्ये" त्यस्यावलोकनेन कुमारिलभट्टपादमतादत्यन्तविलक्षणैव सद्-सत्ख्यातिस्तत्सम्मतेति प्रतीयते इति बोध्यम्, तत्र च विप्रतिपत्तिः प्राङ्निरूपितैवेति ।

अथासत्संसर्गख्यातिनिरासः ।

तत्र शुक्तिरपि सती, रजतमपि हट्टे सत्, अत्र पुरोवर्तिनि च तद्र-जतं भासत इत्ययमंशोऽग्रे निरूप्यमाणायामन्यथाख्यातावपि तुल्यः, सचाग्रे भूषयिष्यते दूषयिष्यते च विस्तरशः। असत्संसर्गभानं पर-मत्र विशिष्टम्, तच्चस्वयमेव दूषितं तैः । नहि केवलमसद्भासितुं न क्षमते सदुपरक्तन्तु भासते इति शक्यसमर्थनम्, असच्चापरो-क्षानुभवविषयश्चेति व्याहतम्, नो खल्वसन् संसर्गः सत्ताद-म्यङ्गत इति वदितुं क्षमसे, सदसतोस्तादात्म्यानुपपत्तेः, उपरागा-नुपपत्तेश्च, असंश्च क्वचित्सम्बद्धश्चेति व्याहतम् । यदि च बौद्धैःसन्धि विधायाऽसतोऽप्यपरोक्षानुभवं समर्थयसे तर्हि सर्वांशे एवासत्ख्यातिमभ्युपगत्याऽपि स समर्थनीय इति व्यर्थोऽयं तत्र स्याद् बौद्धैर्विवादः। अयुक्तमिति मत्वा चेदमवहेलितं नव्यनैयायिकैः यत्र च गृह एव विवादस्तत्रापरैःकिमुवाच्यमिति किंमृतस्य मारणे-नेति । तदुक्तं तर्कचणैः—"सन्मात्रविषय एव भ्रमः, रजतपुरो-वर्तिनोः सत्त्वात्, न च संसर्गोऽसन्, तदुभयातिरिक्तस्य प्रमाणा-नारोहात्संसर्गारोपस्थलेऽपि एवमेव, भ्रमत्वञ्च तदभाववति तत्प्र-कारकत्वादि" इति । एतेन पुरोवर्तिनं रजततया प्रत्येमीत्यनुभवो ऽपि सत्संसर्गविषयकत्वेनैवोपपादित इति ।

अथ सर्वासत्ख्यातिनिरूपणम् ।

असत्त्वं ज्ञानविषयतासमनियतं न वेति विप्रतिपत्तिरधुना निरास्या। तत्र पूर्वः पक्षः-शुक्त्यतिरिक्तो देशो रजतत्वात्यन्ता-

भाववान् देशत्वात् शुक्तिवदित्यनुमानमसद्भाने मानम् । न च शुक्त्यतिरिक्ते घटादौ रजतत्वाभावस्वीकारात्सिद्धसाधनं, पक्षता-वच्छेदकावच्छेदेनानुमितिसत्त्वात्, शुक्त्यतिरिक्तरजते साध्यास-त्त्वाद्बाधस्तु नोद्भाव्यस्तत्र रजतत्वप्रतीतेः प्रमात्व एवास्माकं विप्र-तिपत्तेः । अथ रजतत्वेनैव पक्षताऽस्तु, न चानुमितेराहार्यत्वा-पत्तिरत एवाकिञ्चित्करत्वापत्तिर्घटवत्तां स्वीकृत्य तत्रैव घटाभाव-मवगाहमानायाः प्रतीतेरिवेति वाच्यम् रजतत्वेन पराभिमतमिति रीत्या प्रयोगेऽदोषादितिचेदस्तु ।

ननु रजतसामग्र्यप्रसूतत्वमुपाधिः, शुक्त्यादौ सत्त्वेन साध्य-व्यापकत्वं, रजतेऽसत्त्वेन च साधनाव्यापकत्वमिति चेन्न, पक्षमात्र-व्यावर्तकत्वात् । अपिचोपाध्यभावेन साध्याभावे साध्यमाने व्यति-रेकव्याप्तावुपाधिः, तथाहि, रजतत्वेनाभिमतं रजतत्ववत् रजतसाम-ग्रीप्रसूतत्वाद् व्यतिरेके घटवदित्यत्र व्यतिरेकव्याप्त्या, रजतत्वेन पराभिमतं रजतसामग्रीप्रसूतं न भवितुमर्हति रजतत्वाभावाद्घटव-दित्यनुमितौ रजतसामग्रीनिष्ठप्रागभावाप्रतियोगित्वस्य सन्दिह्य-मानस्योपाधित्वात्, साध्यव्यापकत्वं निश्चितम्, साधनाव्यापकत्वं सन्दिग्धम् । एवं रजतत्वं समवायेन रजतवृत्ति न जातित्वात् घट-त्ववदित्यपि साधु, अत्रापि रजतसामग्र्यप्रसूतवृत्तित्वमुपाधिः पूर्वाभिहितदिशा निरास्यः ।

शुक्तौ च रजतत्वं न केनाऽपि स्वीकृतम्, यदि कश्चिदभ्यु-पजगाम, सोऽनुभवानुसरणादेवाहेलनीयः नहि शुक्त्याऽपि तादृशं कटकादि निर्मातुं पार्यते, यादृशं रजतादिति । एतेन शुक्ती रजतात्मना परिणमते इति केषाञ्चिदुद्घोषोऽपि प्रतारणा-यितः । पुरोवर्तिनि रजते वा "इदंरजतमिति ज्ञानं भ्रान्ति-रिति न वक्तुं सुशकम्, वर्तमानत्वात्तयोः । तयोः संसर्गा-शे स्याद्भ्रान्तिस्तस्यासत्त्वात्; तथा चासत्ख्यातिर्दत्तपदा सर्वास-

वत्साधनेनैव विश्राम्यति, यदाहुः-

प्रसरं न लभन्ते हि यावत्कचन मर्कटाः।
नाभिद्रवन्ति तावद्धि पिशाचा वा स्वगोचरे॥

एकत्रासत एवापरोक्षभानस्य क्लृप्तत्वेऽपरत्राऽपि तदेवापरोक्षमवभासिष्यते, इति व्यर्थोऽयं प्रपञ्चाभ्युपगम इति शून्यतैव भगवती परमार्थसती विजयते।

यदि धर्मधर्मिभावमनापन्ना एव इदंरजतसंसर्गास्त्रयोऽवभासन्ते ते चास्मिन्नये सन्त एवेति भणसि तर्हि समूहालम्बनादस्य कियन्तं विशेषमाकलयसि, येनैकस्य प्रमात्वेऽपरस्य च भ्रमत्वे आदरः तथा च विषयस्य सत्वे बाधग्रह एव नोदियात्, उदेति च बाधग्रहस्तस्माच्च पूर्वग्रहस्य भ्रान्तित्वकल्पना, सति च भ्रान्तित्वे तदन्यथानुपपत्त्याऽसद्विषयकत्वं स्वीकार्यम्, सद्विषयकश्च भ्रमश्चेत्यस्य विरुद्धत्वात्। असदेव रजतमभादित्यनुभवोऽप्यसत्ख्यातौ मानम्। तदेवं प्रत्यक्षानुमानार्थापत्तयस्तत्र मानानीति सिद्धम्।

तथापि कथमत्र मनःप्रत्ययमादधीमहि असतोऽपरोक्षतानर्हत्वात्, नोचेत्कथञ्चातीतानागतयोरपरोक्षावभासः,-स्याच्चेत्थं सर्वः सर्वज्ञता, अन्यत्र वर्तमानस्यापि पुरोवर्तिनि असत्त्वात्, अतीतानागतानामपि चासत्त्वात्, असतश्चापरोक्षत्वस्वीकारात् सर्वज्ञतासम्पत्त्यर्थं तवागमेषु च साधनोपदेशा अपि वैयर्थ्यं कथन्नाश्नुवीरन्, तस्मात्त्याज्योऽयमसत्प्रकाशनसमर्थनाग्रह इति चेन्मैवं वोचः,

न खलु ममैव पुरत इयं चेतोव्यथाऽभिनेया, सर्वैरेव तु असत एव भानमभ्युपतेव्यमिति ब्रूमः। अन्यथाख्यातिवादिनां हि अन्यत्र देशेऽस्तु नाम रजतं, अत्र तु तदसदेव, अन्यत्र सत्तामात्रेण च विशेषं वदता कालिकातास्थभोजनेन तृप्तिमभिलष्यन् वाराणसेयोऽन्वहारि। नह्यन्यत्र सदपि अत्र कमपि विशेषमाधत्ते, अपरोक्षतयाऽवभासनाच्च नैषा स्मृतिरपि येन संस्कार एव विशेष आधेय

इति भणितुं शक्येत । अत्रैव रजतं सदिति ब्रुवाणस्तु रजतार्थिनं शुक्तिकाशकलैरेव किमिति न कृतार्थीकुर्यात् । आत्मख्यातिवादिनाऽपि बहिरसत एव भानस्वीकृतेरसतो भानमशक्यव्युदासम् ।

अत्रोत्पन्नं नूतनं रजतमिति व्याहरंस्तूपहास्य एव संख्यावद्भिः । तस्मादसत एव प्रतिभास इत्यक्रमेणाप्यालम्बनीयम् । अपि च न मन्नये व्यवहारेऽपि विश्वमिदं विश्वं गगनकुसुमायते एव, परमार्थतस्त्वलीकत्वं वदामः, नहि मया सांवृतं सत्त्वमपि पदार्थानां नेष्यते, नापि च विज्ञानं नास्थीयते, क्षणिकत्वभावनानिवर्त्यः स्थैमेव शून्यत्वभावनया निवर्त्याऽबाध्यतापि व्यवहारिकी मयाऽभ्युपगतैव, यदाह,

"फेनपिण्डोपमं रूपं वेदना बुद्बुदोपमा,
मरीचिसदृशी संज्ञा, संस्काराः कदलीनिभाः ।
मायोपमं च विज्ञानमुक्तमादित्यबन्धुनेति" ।

शून्यताया परमार्थतामेव परं समर्थयामहे, विज्ञानमपि चानिर्वाच्यमभिदधता मया विज्ञानवादिमतप्रवेशोऽपि न व्यधायि, नहि विज्ञानस्याप्यनिर्वाच्यतां स मेने, येन मतैक्यं शङ्कास्पदमपि भवेत् । ननु बाह्यस्य प्रपञ्चस्यानिर्वाच्यत्वाविशेषे विज्ञानस्य सत्त्वं स्वीकृत्य योगाचारेण सहैकमत्यमेव किन्नालम्बसे इति चेन्न, विषयस्यानिर्वाच्यत्वसिद्धौ निर्विषयकज्ञानासम्भवात् ज्ञानस्य विषयसमानयोगक्षेमत्वात्, न खल्वनिर्वाच्यमपि नित्यं येन तस्यैव सर्वदाऽवस्थानात् ज्ञानधारायास्तद्विषयकत्वमेवेति शक्यवचनं स्यात् तस्माज्ज्ञानमप्यनिर्वाच्यमेव । अतएव " तत्रार्थशून्यं विज्ञानं योगाचाराः समाश्रिता । तस्याप्यभावमिच्छन्ति ये माध्यमिकवादिन" इत्यत्र परमार्थतोऽभावमित्येवार्थः, न तु सांवृतं सत्त्वमपि नेच्छन्तीत्यर्थः ।

सति चैवमसदेव विज्ञानं परमार्थतः समनन्तरप्रत्ययासादित-सामर्थ्यातिशयमसन्तमपि सन्तमिव प्रकाशयति, अतिशयश्च तस्य विषयजन्यज्ञानापेक्षया विषयाजन्यत्वमेव, एवञ्च सति सर्व-सर्वज्ञत्वापत्तिरपि न दानार्हा । कथमसतः समनन्तरप्रत्ययस्य सामर्थ्याधायकत्वं कथंञ्चासतः सामर्थ्याश्रयत्वमिति विकल्प-कल्पना त्वविद्यैवैवोत्सारणीया संवृत्याख्यया। तदेतदेव पदार्थानां संवृत्तिसत्त्वं ब्रूमहे । सिद्धे चैवं भ्रमस्थलेऽसद्भानेऽन्यत्राप्यसत्त्व-मनुमिमीमहे । यथाहुः—

न सन्नासन्नसदसन्नचानुभयतत्त्वकम् ।
विमतं तर्कपीड्यत्वान्मरीचिषु यथोदकम् ॥

न सद्बाध्यत्वात्, अस्य जगतोऽनुभूयते हि बाधो योगजप्र-त्यक्षे शून्यत्वभावनाजननीके, यौक्तिकबाधश्च संक्षेपतोऽभाणि विज्ञानवादप्रस्तावे । नासद्, कालसम्बन्धात्, नहि गगनकुसुममपि कालेन सम्बद्धं, तथा सति जायेत नश्येच्च। न सदसद्, विरोधात् । सद्भिन्नतयाऽसद्भिन्नतया च तात्त्विकत्वेन निर्वचनासम्भवात् सदसद्भिन्नमपि न, तस्मात्सत्यत्वेन लोके प्रतीतिसिद्धस्य सत्त्वं भवत् सांवृतिकमेव भवेत्, असत्त्वं तु तर्कपीड्यत्वेन ब्रूमः, तदभ्यधायि—

"चतुष्कोटि विनिर्मुक्तं तत्त्वं माध्यमिका जगुः" इति ।
" द्वे सत्त्वे समुपाश्रित्य बुद्धानां धर्मदेशना " इति च ।

तस्मात्सकलकलाकलितमदोऽसदेव सचेतनं जगदिति रम्यम् ॥

अथ सर्वासत्ख्यातिनिरासः।

तदेतस्य सर्वभङ्गस्य भङ्गमसूसुचद् भगवान् बादरायणो "नाभाव उपलब्धे" रितिसूत्रेण । अधिष्ठानस्य नाभावः, उपल-ब्धेःप्रमाणात्प्रमितेः । कञ्चिद्धि परमार्थमालम्ब्यापरमार्था प्रति-पिध्यन्ते यथा रज्ज्वादिषु सर्पादय इति च बभाषे भाष्यकृद्भि-

